॥ ९ ॥ अथोत्तरेण तपसा ब्रह्मचर्य्येण श्रद्धया विद्ययाऽऽत्मानम
न्विष्यादित्यमभिजयन्त एतद्वै प्राणानामायतनमेतदमृतमभयमेत
त् परायणमेतस्मान्नपुनरावर्त्तन्त इत्येष निरोधस्तदेष श्लोकः॥ १०॥
पञ्चपादं पितरं द्वादशाकृतिं दिव आहुः परेअर्धे पुरीषिणम् ॥ अथे
मेअन्य उपरे विचक्षणं सप्तचक्रे षडर आहुरर्पितमिति ॥ ११ ॥
मासो वै प्रजापतिस्तस्य कृष्णपक्ष एव रयिः शुक्लः प्राणस्तस्मादेत
ऋषयः शुक्लइष्टं कुर्वन्तीतर इतरस्मिन् ॥ १२ ॥ अहोरात्रे वै प्रजाप

तिस्तस्याहरेव प्राणो रात्रिरेव रयिः प्राणं वा एते प्रस्कन्दन्ति ॥ ये दिवा रत्या संयुज्यन्ते ब्रह्मचर्य्यमेव तद्यद्रात्रौ रत्या संयुज्यते ॥ १३ ॥ अन्नं वै प्रजापतिस्ततो ह वै तद्रेतस्तस्मादिमाः प्रजाः प्रजायन्त इति ॥ ॥ १४ ॥ तद्ये ह वै तत्प्रजापतिव्रतं चरन्ति ते मिथुनमुत्पादयन्ते ॥ तेषामेवैष ब्रह्मलोको येषां तपो ब्रह्मचर्य्यं येषु सत्यं प्रतिष्ठितम् ॥ १५ ॥ तेषामसौ विरजो ब्रह्मलोको न येषु जिह्ममनृतं न माया चेति ॥ १६ ॥

इति प्रथमः प्रश्नः ॥ १ ॥ ॥ अथ हैनं भार्गवो वैदर्भिः पप्रच्छ ॥ भ

गवन् कत्येव देवाः प्रजां विधारयन्ते कतर एतत् प्रकाशयन्ते कः पुन
रेषां वरिष्ठ इति ॥ १ ॥ तस्मै स होवाचाकाशो ह वा एष देवो वायुर
ग्निरापः पृथिवी वाङ्मनश्चक्षुः श्रोत्रञ्च ॥ तेप्रकाश्याभिवदंति वयमे
तद्बाणमवष्टभ्य विधारयामः ॥ २ ॥ तान् वरिष्ठः प्राण उवाच ॥ मा मो
हमापद्यथाऽहमेवैतत् पञ्चधात्मानं प्रविभज्यैतद्बाणमवष्टभ्यविधार
यामीति ॥ ३ ॥ तेऽश्रद्दधाना बभूवुः सोऽभिमानादूर्ध्वमुत्क्रमत इव त
स्मिन्नुत्क्रामत्यथेतरे सर्व एवोत्क्रामन्ते तस्मिंश्च प्रतिष्ठमाने सर्व एव

2

प्रातिष्ठन्ते ॥ तद्यथा मक्षिका मधुकरराजानमुत्क्रामन्तं सर्व्वा एवो
त्क्रामन्ते तस्मिंश्च प्रतिष्ठमाने सर्व्वा एव प्रातिष्ठन्त एवं वाङ्मनश्चक्षुः
श्रोत्रञ्च ते प्रीताः प्राणं स्तुन्वन्ति ॥ ४ ॥ एषोऽग्निस्तपत्येष सूर्य्य ए
ष पर्जन्यो मघवानेष वायुरेष पृथिवी रयिर्देवः सदसच्चामृतञ्च यत्
॥ ५ ॥ अरा इव रथनाभौ प्राणे सर्वं प्रतिष्ठितम् ॥ ऋचो यजुंषि सा
मानि यज्ञः क्षत्रं ब्रह्म च ॥ ६ ॥ प्रजापतिश्चरसिगर्भे त्वमेव प्रतिजाय
से ॥ तुभ्यं प्राणः प्रजास्त्विमा बलिं हरन्ति यः प्राणैः प्रतितिष्ठसि ॥

॥७॥ देवानामसि वह्नितमः पितॄणां प्रथमा स्वधा ॥ ऋषीणां चरितं सत्यमथर्वाङ्गिरसामसि॥८॥ इन्द्रस्त्वं प्राण तेजसा रुद्रोऽसि परिरक्षिता ॥त्वमन्तरिक्षे चरसि सूर्यस्त्वं ज्योतिषाम्पतिः॥९॥ यदा त्वमभिवर्षस्यथेमाः प्राण ते प्रजाः ॥ आनन्दरूपास्तिष्ठन्ति कामायाऽन्नम्भविष्यतीति ॥ १० ॥ व्रात्यस्त्वं प्राणैकऋषिरत्ता विश्वस्य सत्पतिः॥वयमाद्यस्य दातारः पिता त्वं मातरिश्व नः॥ ११ ॥ या ते तनूर्वाचि प्रतिष्ठिता या श्रोत्रे या च चक्षुषि ॥ या च मनसि सन्तता शिवां तां कु

3

रु मोत्क्रमीः ॥ १२ ॥ प्राणस्येदं वशे सर्वं त्रिदिवे यत्प्रतिष्ठितम् ॥ माते व पुत्रान् रक्षस्व श्रीश्च प्रज्ञां च विधेहिन इति ॥ १३ ॥ इति द्वितीयप्रश्नः ॥ २ ॥ ॥ अथ हैनं कौसल्यश्चाश्वलायनः पप्रच्छ ॥ भगवन् कुत एष प्राणो जायते कथमायात्यस्मिञ्छरीर आत्मानं वा प्रविभज्य कथं प्रातिष्ठते केनोत्क्रमते कथं बाह्यमभिधत्ते कथमध्यात्ममिति ॥ ॥ १ ॥ तस्मै स होवाचाति प्रश्नान् पृच्छसि ब्रह्मिष्ठोऽसीति तस्मात्तेऽहं ब्रवीमि ॥ २ ॥ आत्मन एष प्राणो जायते ॥ यथैषा पुरुषेच्छायैत

स्मिन्नेतदाततं मनोकृतेनायात्यस्मिञ्छरीरे ॥ ३ ॥ यथा सम्राडेवा
धिकृतान्विनियुङ्क्त एतान् ग्रामानेतान् ग्रामानधितिष्ठस्वेत्येवमेवै
ष प्राण इतरान् प्राणान् पृथक् पृथगेव सन्निधत्ते ॥ ४ ॥ पायूपस्थेऽपा
नं चक्षुः श्रोत्रे मुखनासिकाभ्यां प्राणः स्वयं प्रातिष्ठते मध्ये तु समान
एष ह्येतद्धुतमन्नं समन्नयति तस्मादेताः सप्तार्चिषोभवन्ति ॥ ५ ॥ हृ
दि ह्येषत आत्मा ॥ अत्रैतदेकशतं नाडीनां तासां शतं शतमेकैकस्य
द्वासप्ततिर्द्वासप्ततिः प्रतिशाखानाडीसहस्राणि भवन्त्यासु व्यानश्चर

ति ॥ ६ ॥ अथैकयोर्द्ध्व उदानः पुण्येन पुण्यं लोकं नयति पापेन पापमु
भाभ्यामेव मनुष्यलोकम् ॥ ७ ॥ आदित्यो ह वै बाह्यः प्राण उदय
त्येष ह्येनं चाक्षुषं प्राणमनुगृह्णानः ॥ पृथिव्यां या देवता सैषा पुरुष
स्याऽपानमवष्टभ्यान्तरा यदाकाशः स समानो वायुर्व्यानः ॥८ ॥ ते
जो ह वावउदानस्तस्मादुपशान्ततेजाः ॥ पुनर्भवमिन्द्रियैर्मनासि संप
द्यमानैः ॥ ९ ॥ यच्चित्तस्तेनैष प्राणमायाति प्राणस्तेजसा युक्तः ॥स
हात्मना यथा सङ्कल्पितं लोकंनयति॥ १०॥ य एवं विद्वान् प्राणं वेद॥

न हास्य प्रजा हीयंतेऽमृतो भवति तदेष श्लोकः ॥ ११ ॥ उत्पत्तिमाय तिं स्थानं विभुत्वञ्चैव पञ्चधा ॥ अध्यात्मञ्चैव प्राणस्य विज्ञायामृत मश्नुते विज्ञायामृतमश्नुत इति ॥ १२ ॥ ॥ इति तृतीयप्रश्नः ॥ ३ ॥
अथ हैनं सौर्य्यायणी गार्ग्यः पप्रच्छ ॥ भगवन्नेतस्मिन् पुरुषे कानि स्वपन्ति कान्यस्मिन् जाग्रति कतर एष देवः स्वप्नान् पश्यति कस्यैतत् सुखं भवति कस्मिन्नु सर्वे सम्प्रतिष्ठिता भवन्तीति॥ १ ॥ तस्मै स होवाच ॥ यथा गार्ग्य मरीचयोऽर्कस्यास्तं गच्छतः सर्व्वा एतस्मिं

स्तेजोमण्डल एकीभवन्ति ॥ ताः पुनः पुनरुदयतः प्रचरन्त्येवं हवै त
त्सर्वं परे देवे मनस्येकीभवति ॥ तेन तर्ह्येष पुरुषो न शृणोति न पश्य
ति न जिघ्रति न रसयते न स्पृशते नाभिवदते नादत्ते नानन्दयते न वि
सृजते नेयायते स्वपितीत्याचक्षते ॥ २ ॥ प्राणाग्नय एवैतस्मिन् पुरे
जाग्रति ॥ गार्हपत्यो ह वा एषोऽपानो व्यानोऽन्वाहार्य्यपचनो यद्गार्ह
पत्यात्प्रणीयते प्रणयनादाहवनीयः प्राणः ॥ ३ ॥ यदुच्छ्वासनिश्वासा
वेतावाहुती समं नयति स समानः ॥ मनो ह वाव यजमान इष्टफलमे

वोदानः स एनं यजमानमहरहर्ब्रह्म गमयति ॥४॥ अत्रैष देवः स्वप्ने म
हिमानमनुभवति ॥ यद्दृष्टं दृष्टमनुपश्यति श्रुतं श्रुतमेवार्थमनुशृणो
ति देशदिगन्तरैश्च प्रत्यनुभूतं पुनः पुनः प्रत्यनुभवति दृष्टञ्चादृष्टञ्च
श्रुतञ्चाश्रुतञ्चानुभूतञ्चाननुभूतञ्चसच्चासच्चसर्व्वं पश्यति सर्व्वः पश्य
ति ॥ ५ ॥ स यदा तेजसाऽभिभूतो भवत्यत्रैष देवः स्वप्नान्न पश्यत्य
थ तदैतस्मिञ्छरीरे एतत्सुखं भवति ॥ ६ ॥ स यथा सोम्य वयांसि
वासो वृक्षं सम्प्रतिष्ठन्ते ॥ एवं ह वै तत्सर्व्वं पर आत्मनि सम्प्रतिष्ठते ॥

॥७॥ पृथिवी च पृथिवीमात्रा चापश्चापोमात्राच तेजश्च तेजोमात्रा च वायुश्च वायुमात्रा चाकाशश्चाकाशमात्रा च चक्षुश्च द्रष्टव्यञ्च श्रोत्रञ्च श्रोतव्यञ्च घ्राणञ्च घ्रातव्यञ्च रसश्च रसयितव्यञ्च त्वक् च स्पर्शयितव्यञ्च वाक्च वक्तव्यं च हस्तौ चादातव्यं चोपस्थश्चानन्दयितव्यं च पायुश्च विसर्जयितव्यं च पादौ च गन्तव्यंच मनश्च मन्तव्यं च बुद्धिश्च बोद्धव्यं चाहङ्कारश्चाहङ्कर्त्तव्यं च चित्तंच चेतयितव्यंच तेजश्च विद्योतयितव्यं च प्राणश्च विधारयितव्यंच ॥८॥

एष हि द्रष्टा स्प्रष्टा श्रोता घ्राता रसयिता मन्ता बोद्धा कर्त्ता विज्ञाना
त्मा पुरुषः ॥ स परेऽक्षरे आत्मनि सम्प्रतिष्ठते ॥ ९ ॥ परमेवाक्षरं
प्रतिपद्यते स यो ह वै तदच्छायमशरीरमलोहितं शुभ्रमक्षरं वेदयते
यस्तु सोम्य ॥ स सर्वज्ञः सर्व्वो भवति तदेष श्लोकः॥ १० ॥ विज्ञाना
त्मा सहदेवैश्च सर्व्वैः प्राणा भूतानि सम्प्रतिष्ठन्ति यत्र॥ तदक्षरं वेदय
ते यस्तु सोम्य स सर्व्वज्ञः सर्व्वमेवाविवेशेति॥ ११ ॥ इति चतुर्थप्र
श्नः समाप्तः ॥ ४ ॥ अथ हैनं शैव्यः सत्यकामः पप्रच्छ ॥ स यो ह वै

प्रश्नो

॥३१॥

तद्भगवन्मनुष्येषु प्रायणान्तमोङ्कारमभिध्यायीत ॥ कतमं वाव स

तेन लोकं जयतीति ॥ १ ॥ तस्मै सहोवाच ॥ एतद्वै सत्यकाम परञ्चा

परञ्च ब्रह्म यदोङ्कारस्तस्माद्विद्वानेतेनैवायतनेनैकतरमन्वेति ॥ २॥ स

यद्येकमात्रमभिध्यायीत स तेनैव संवेदितस्तूर्णमेव जगत्यामभिस

म्पद्यते ॥ तमृचो मनुष्यलोकमुपनयन्ते स तत्र तपसा ब्रह्मचर्य्येण

श्रद्धया संपन्नो महिमानमनुभवति ॥ ३ ॥ अथ यदि द्विमात्रेण मन

सि सम्पद्यते सोऽन्तरिक्षं यजुर्भिरुन्नीयते ॥ सोम लोकं स सोमलोके

विभूतिमनुभूय पुनरावर्त्तते ॥ ४ ॥ यः पुनरेतन्त्रिमात्रेणैवोमित्येतेनैवाक्षरेण परं पुरुषमभिध्यायीत स तेजसि सूर्य्ये सम्पन्नः ॥ यथा पादोदरस्त्वचा विनिर्म्मुच्यत एवं हवै सपाप्मना विनिर्मुक्तः स सामभिरुन्नीयते ब्रह्मलोकं स एतस्माज्जीवघनात्परात्परं पुरिशयं पुरुषमीक्षते तदेतौ श्लोकौ भवतः ॥ ५ ॥ तिस्रो मात्रा मृत्युमत्यः प्रयुक्ता अन्योन्यसक्ता अनविप्रयुक्ताः ॥ क्रियासु बाह्याभ्यन्तरमध्यमासु सम्यक् प्रयुक्तासु न कम्पते ज्ञः ॥ ६ ॥ ऋग्भिरेतं यजुर्भिरन्तरिक्षं साम

भिर्यत्तत्कवयो वेदयन्ते ॥ तमोङ्कारेणेवायतनेनान्वेति विद्वान् यत्त
च्छान्तमजरममृतमभयं परञ्चेति ॥७॥ इति पञ्चमप्रश्नः समाप्तः ॥५
॥ अथ हैनं सुकेशा भारद्वाजः पप्रच्छ ॥ भगवन्हिरण्यनाभः कौस
ल्यो राजपुत्रो मामुपेत्यैतं प्रश्नमपृच्छत ॥ षोडशकलं भारद्वाज पुरु
षं वेत्थ तमहं कुमारमब्रुवं नाहमिमं वेद यद्यहमिममवेदिषं कथं ते ना
वक्ष्यमिति समूलो वा एष परिशुष्यति योऽनृतमभिवदति तस्मान्ना
र्हाम्यनृतं वक्तुं स तूष्णीं रथमारुह्य प्रवव्राज ॥ तं त्वा पृच्छामि क्वासौ

पुरुष इति ॥ १ ॥ तस्मै स होवाचेहैवान्तःशरीरे सोम्य स पुरुषो य स्मिन्नेताः षोडशकलाः प्रभवन्तीति ॥ २ ॥ स ईक्षांचक्रे ॥ कस्मिन्न हमुत्क्रान्त उत्क्रान्तो भविष्यामि कस्मिन् वा प्रतिष्ठिते प्रतिष्ठास्यामी ति ॥ ३ ॥ स प्राणमसृजत प्राणाच्छ्रद्धां खं वायुर्ज्योतिरापःपृथिवी न्द्रियम् ॥ मनोऽन्नमन्नाद्वीर्य्यं तपोमन्त्राः कर्म्मलोका लोकेषु च ना म च ॥ ४ ॥ स यथेमा नद्यः स्यन्दमानाः समुद्रायणाः समुद्रं प्राप्या स्तंगच्छन्ति भिद्येते तासां नामरूपे समुद्र इत्येवं प्रोच्यते ॥ एवमेवा

9

स्य परिद्रष्टुरिमाः षोडशकलाः पुरुषायणाः पुरुषं प्राप्यास्तं गच्छन्ति भिद्येते तासां नामरूपे पुरुष इत्येवं प्रोच्यते स एषोऽकलोऽमृतो भवति तदेष श्लोकः ॥ ५ ॥ अरा इव रथनाभौ कला यस्मिन् प्रतिष्ठिताः ॥ तं वेद्यं पुरुषं वेद यथा मा वो मृत्युः परिव्यथा इति ॥ ६ ॥ तान् होवाचैतावदेवाहमेतत्परं ब्रह्म वेद ॥ नातः परमस्तीति ॥ ७ ॥ ते तमर्च्चयन्तस्त्वं हि नः पिता योऽस्माकमविद्यायाः परं पारं तारयसीति ॥ नमः परम ऋषिभ्यो नमः परमऋषिभ्यः ॥ ८ ॥ इति षष्ठप्रश्नः समाप्तः ॥

इति प्रश्नोपनिषत् समाप्ता ॥ ❁ ॥ ॐ तत् सत् ॐ भद्रंकर्णेभिः शृणु
याम देवाः। भद्रं पश्येमाक्षभिर्यजत्राः। स्थिरैरंगैस्तुष्टुवांसस्तनूभिः।
र्व्यशेमदेवहितंयदायुः।स्वस्तिनइंद्रोवृद्धश्रवाः। स्वस्तिनः पूषाविश्व
वेदाः ॥ स्वस्तिनस्तार्क्ष्यो अरिष्टनेमिः।स्वस्ति नो बृहस्पतिर्दधातु
ॐ शांतिः शांतिः शांतिः ॥ हरिःॐ ॥ ॐ ॥ ॥ ॐ ॥

अथाऽथर्ववेदीयमुण्डकोपनिषत्प्रारंभः॥ ॐ भद्रंकर्णेभिः शृणुयामदे
वाः। भद्रं पश्येमाक्षभिर्यजत्राः। स्थिरैरंगैस्तुष्टुवांसस्तनूभिर्व्यशेमदे

10

वहितंयदायुः ॥स्वस्ति न इंद्रो वृद्धश्रवाःस्वस्ति।नः पूषाविश्ववेदाः॥
स्वस्तिनस्तार्क्ष्यो अरिष्टनेमिः। स्वस्तिनो बृहस्पतिर्दधातु॥ॐ शांतिः
शांतिः शांतिः॥ हरि ॐ ब्रह्मा देवानां प्रथमः सम्बभूव विश्वस्य कर्ता
भुवनस्य गोप्ता॥ स ब्रह्मविद्यां सर्वविद्याप्रतिष्ठामथर्व्वाय ज्येष्ठपुत्रा
य प्राह ॥ १ ॥ अथर्वणे यां प्रवदेत ब्रह्माथर्व्वा तां पुरोवाचाङ्गिरे ब्र
ह्मविद्याम् ॥स भारद्वाजाय सत्यवहाय प्राह भारद्वाजोऽङ्गिरसे परावरा
म्॥ २ ॥शौनको ह वै महाशालोऽङ्गिरसं विधिवदुपसन्नःपप्रच्छ ॥

कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवतीति ॥ ३ ॥ तस्मै स होवाच ॥ द्वे विद्ये वेदितव्ये इति ह स्म यद्ब्रह्मविदो वदन्ति परा चैवापरा च ॥ ४ ॥ तत्रापरा ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेदः शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमिति ॥ अथ परा यया तदक्षरमधिगम्यते ॥ ५ ॥ यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुःश्रोत्रं तदपाणिपादं ॥ नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं यद्भूतयोनिं परिपश्यन्ति धीराः ॥ ६ ॥ यथोर्णनाभिः सृजते गृह्णते च यथा पृथिव्या

मोषधयः सम्भवन्ति ॥ यथा सतः पुरुषात् केशलोमानि तथाक्षरात् सम्भवतीह विश्वम् ॥ ७ ॥ तपसा चीयते ब्रह्म ततोऽन्नमभिजायते ॥ अन्नात् प्राणो मनः सत्यं लोकाः कर्म्मसु चामृतम् ॥ ८ ॥ यः सर्वज्ञः सर्वविद्यस्य ज्ञानमयं तपः ॥ तस्मादेतद्ब्रह्म नाम रूपमन्नं च जायते ॥ ९ ॥ इतिप्रथममुण्डके प्रथमः खण्डः ॥ १ ॥ तदेतत्सत्यं मन्त्रेषु कर्माणि कवयो यान्यपश्यंस्तानि त्रेतायां बहुधा सन्ततानि ॥ तान्याचरथ नियतं सत्यकामा एष वः पन्थाः सुकृतस्य लोके ॥ १ ॥

यदा लेलायते ह्यर्चिः समिद्धे हव्यवाहने॥ तदाज्यभागावन्तरेणाहुतीः प्रतिपादयेच्छ्रद्धया हुतम्॥ २ ॥ यस्याग्निहोत्रमदर्शमपौर्णमासमचातुर्मास्यमनाग्रयणमतिथिवर्जितं च। अहुतमवैश्वदेवमविधिनाहुतमासप्तमांस्तस्य लोकान् हिनस्ति ॥ ३ ॥ काली कराली च मनोजवा च सुलोहिता या च सुधूम्रवर्णा॥ स्फुलिङ्गिनी विश्वरूपी च देवी लेलायमाना इति सप्त जिह्वाः ॥ ४ ॥ एतेषु यश्चरते भ्राजमानेषु यथाकालं चाहुतयो ह्याददायन्॥ तन्नयन्त्येताः सूर्य्यस्य रश्मयो यत्र देवानां

मुंडको ॥३६॥

प० ५ प्र०मुं०

पतिरेकोऽधिवासः॥ ५॥ एह्येहीति तमाहुतयः सुवर्चसः सूर्य्यस्य रश्मिभिर्यजमानं वहन्ति॥ प्रियांवाचमभिवदन्त्योऽर्च्चयन्त्य एष वः पुण्यसुकृतो ब्रह्मलोकः॥ ६ ॥प्लवाह्येते अदृढा यज्ञरूपा अष्टादशोक्तमवरं येषु कर्म्म॥ एतच्छ्रेयोयेऽभिनन्दन्ति मूढा जरामृत्युं तेपुनरेवापि यन्ति॥ अविद्यायामन्तरे वर्तमानाः स्वयं धीराः पण्डितंमन्यमानाः ॥ जंघन्यमानाः परियन्ति मूढा अन्धेनैव नीयमाना यथान्धाः॥ ८ ॥ अविद्यायां बहुधावर्त्तमाना वयं कृतार्था इत्यभिमन्यन्ति बालाः॥

॥३६॥

यत्कर्म्मिणो न प्रवेदयन्ति रागात्तेनातुराः क्षीणलोकाश्च्यवन्ते ॥
॥ ९ ॥ इष्टापूर्त्तं मन्यमाना वरिष्ठं नान्यच्छ्रेयो वेदयन्ते प्रमूढाः ॥
नाकस्य पृष्ठे ते सुकृतेऽनुभूत्वेमं लोकं हीनतरं वाविशन्ति ॥ १० ॥ त
पःश्रद्धे ये ह्युपवसन्त्यरण्ये शान्ताविद्वांसो भैक्षचर्य्यां चरन्तः ॥ सू
र्य्यद्वारेण ते विरजाः प्रयान्ति यत्रामृतः स पुरुषो ह्यव्ययात्मा ॥ ११ ॥
परीक्ष्य लोकान् कर्म्मचितान् ब्राह्मणो निर्वेदमायान्नास्त्यकृतः कृते
न ॥ तद्विज्ञानार्थं गुरुमेवाभिगच्छेत् समित्पाणिः श्रोत्रियं ब्रह्मनि

13

छं ॥ १२ ॥ तस्मै स विद्वानुपसन्नाय सम्यक् प्रशान्तचित्ताय शमा
न्विताय ॥ येनाक्षरं पुरुषं वेद सत्यं प्रोवाच तां तत्त्वतो ब्रह्मविद्याम् ॥
॥ १३ ॥ इति प्रथममुण्डके द्वितीयः खण्डः ॥ २ ॥ इति प्रथममुण्ड
कं समाप्तं ॥ १ ॥ तदेतत्सत्यं यथासुदीप्तात् पावकाद्विस्फुलिङ्गाः सह
स्रशः प्रभवन्ते सरूपाः ॥ तथा क्षरा द्विविधाः सोम्य भावाः प्रजा
यन्ते तत्र चैवापियन्ति ॥ १ ॥ दिव्यो ह्यमूर्त्तः पुरुषः स बाह्याभ्यन्त
रो ह्यजः ॥ अप्राणो ह्यमनाः शुभ्रो ह्यक्षरात्परतः परः ॥ २ ॥ एतस्मा

ज्जायतेप्राणोमनः सर्व्वेन्द्रियाणि च ॥खं वायुर्ज्योतिरापः पृथिवीवि
श्वस्य धारिणी ॥ ३ ॥ अग्निर्म्मूर्द्धा चक्षुषी चन्द्रसूर्य्यौदिशः श्रोत्रे
वाग्विवृताश्च वेदाः॥वायुः प्राणोहृदयं विश्वमस्य पद्भ्यां पृथिवी ह्ये
ष सर्व्वभूतान्तरात्मा ॥ ४ ॥ तस्मादग्निः समिधो यस्य सूर्य्यः सोमात्
पर्जन्य ओषधयः पृथिव्याम्॥ पुमान् रेतः सिञ्चति योषितायां बह्वीः
प्रजाः पुरुषात् सम्प्रसूताः ॥ ५ ॥ तस्मादृचः साम यजूंषि दीक्षा य
ज्ञाश्च सर्व्वे क्रतवो दक्षिणाश्च ॥ संवत्सरश्च यजमानश्च लोकाः सोमो

14

यत्र पवते यत्रसूर्य्यः ॥ ६ ॥ तस्माच्च देवा बहुधा सम्प्रसूताः साध्या मनुष्याः पशवो वयांसि ॥ प्राणापानौ व्रीहियवौ तपश्च श्रद्धा सत्यं ब्रह्मचर्य्यं विधिश्च॥ ७॥सप्त प्राणाः प्रभवन्ति तस्मात्सप्तार्च्चिषःसमिधः सप्त होमाः ॥ सप्त इमे लोका येषु चरन्ति प्राणागुहाशया निहिताः सप्त सप्त ॥ ८ ॥अतः समुद्रा गिरयश्चसर्व्वेऽस्मात् स्यन्दन्ते सिंधवः सर्व्वरूपाः ॥ अतश्च सर्व्वा ओषधयो रसश्च येनैष भूतैस्तिष्ठते ह्यन्तरात्मा ॥ ९ ॥ पुरुष एवेदं विश्वं कर्म्म तपो ब्रह्म परामृतम् ॥ एतद्यो वेद नि

हितं गुहायां सोऽविद्याग्रन्थिं विकिरतीह सोम्य ॥ १० ॥ इति द्वि
तीयमुण्डके प्रथमः खण्डः॥ १ ॥ आविः सन्निहितं गुहाचरन्नाम
महत्पदमत्रैतत्समर्पितम् ॥ एजत्प्राणन्निमिषच्च यदेतज्जानथ सदसद्व
रेण्यं परंविज्ञानाद्यद्वरिष्ठं प्रजानाम् ॥ १ ॥ यदर्चिमद्यदणुभ्योऽणु
चयस्मिन् लोका निहिता लोकिनश्च ॥ तदेतदक्षरं ब्रह्म स प्राणस्तदु
वाङ्मनः ॥ तदेतत्सत्यं तदमृतं तद्वेद्धव्यं सोम्य विद्धि ॥ २ ॥ धनु
र्गृहीत्वौपनिषदं महास्त्रं शरं ह्युपासा निशितं संधयीत ॥ आयम्यतद्

भावगतेन चेतसा लक्ष्यं तदेवाक्षरं सोम्य विद्धि ॥ ३ ॥ प्रणवो धनुः शरो ह्यात्मा ब्रह्म तल्लक्ष्यमुच्यते ॥ अप्रमत्तेन वेद्धव्यं शरवत्तन्मयो भवेत् ॥ ४ ॥ यस्मिन् द्यौः पृथिवी चान्तरिक्षमोतं मनः सह प्राणैश्च सर्वैः ॥ तमेवैकं जानथ आत्मानमन्या वाचो विमुञ्चथाऽमृतस्यैष सेतुः ॥ ५ ॥ अरा इव रथनाभौ संहता यत्र नाड्यः स एषोऽन्तश्चरते बहुधा जायमानः ॥ ओमित्येवं ध्यायथ आत्मानं स्वस्ति वः पराय तमसः परस्तात् ॥ ६ ॥ यः सर्वज्ञः सर्वविद्यस्यैष महि

माभुवि दिव्ये ब्रह्मपुरे ह्येष व्योम्न्यात्मा प्रतिष्ठितः ॥ मनोमयः प्रा
णशरीरनेता प्रतिष्ठितोऽन्ने हृदयं सन्निधाय॥ तद्विज्ञानेन परिपश्यन्ति
धीरा आनन्दरूपममृतं यद्विभाति ॥ ७ ॥ भिद्यते हृदयग्रन्थिश्छि
द्यन्ते सर्व्वसंशयाः॥ क्षीयन्ते चास्य कर्म्माणि तस्मिन्दृष्टे परावरे ॥
॥ ८ ॥ हिरण्मये परे कोशे विरजं ब्रह्मनिष्कलम् ॥ तच्छुभ्रं ज्यो
तिषां ज्योतिस्तद्यदात्मविदो विदुः ॥ ९ ॥ न तत्र सूर्य्यो भाति न
चंद्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः ॥ तमेव भान्तमनुभाति

सर्वं तस्य भासा सर्वमिदं विभाति ॥ १० ॥ ब्रह्मैवेदममृतं पुरस्ताद्ब्रह्म पश्चाद्ब्रह्म दक्षिणतश्चोत्तरेण ॥ अधश्चोर्द्ध्वञ्च प्रसृतं ब्रह्मैवेदं विश्वमिदं वरिष्ठं ॥ ११ ॥ ॥ इति द्वितीयमुण्डके द्वितीयः खण्डः ॥ २॥ इति द्वितीयमुण्डकं समाप्तम् ॥ २ ॥ द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते ॥ तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो ऽभिचाकशीति ॥ १ ॥ समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्यमानः ॥ जुष्टं यदापश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः ॥ २ ॥

यदा पश्यः पश्यते रुक्मवर्णं कर्त्तारमीशं पुरुषं ब्रह्मयोनिम् ॥ तदा वि
द्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति ॥ ३ ॥ प्राणो ह्येष
यः सर्वभूतैर्विभाति विजानन् विद्वान् भवते नातिवादी ॥ आत्मक्री
ड आत्मरतिः क्रियावानेष ब्रह्मविदां वरिष्ठः ॥ ४ ॥ सत्येन लभ्यस्त
पसा ह्येष आत्मा सम्यग्ज्ञानेन ब्रह्मचर्य्येण नित्यम् ॥ अन्तःशरीरे
ज्योतिर्म्मयो हि शुभ्रो यं पश्यन्ति यतयः क्षीणदोषाः ॥ ५॥ सत्यमेव
जयते नानृतं सत्येनपन्था विततोदेवयानः ॥येनाक्रमन्त्यृषयो ह्याप्त

कामा यत्र तत्सत्यस्य परमं निधानम् ॥ ६ ॥ बृहच्चतद्दिव्यमचिन्त्य
रूपं सूक्ष्माच्च तत्सूक्ष्मतरं विभाति ॥ दूरात्सुदूरे तदिहान्तिकेच पश्यत्
स्विहैव निहितं गुहायाम् ॥ ७ ॥ न चक्षुषा गृह्यते नापि वाचा नान्यै
र्देवैस्तपसा कर्मणा वा ॥ ज्ञानप्रसादेन विशुद्धसत्त्वस्ततस्तु तं पश्यते
निष्कलं ध्यायमानः ॥ ८ ॥ एषोऽणुरात्मा चेतसा वेदितव्यो यस्मिन्
प्राणः पञ्चधा संविवेश ॥ प्राणैश्चित्तं सर्वमोतं प्रजानां यस्मिन् विशु
द्धे विभवत्येष आत्मा ॥ ९ ॥ यं यं लोकं मनसा संविभाति विशुद्धस

त्त्वः कामयते यांश्च कामान् ॥ तं तं लोकं जायते तांश्च कामांस्तस्मा
दात्मज्ञं ह्यर्च्चयेद्भूतिकामः ॥ १० ॥ इति तृतीयमुण्डके प्रथमः खण्डः
॥ १ ॥ स वेदैतत्परमं ब्रह्म धाम यत्र विश्वं निहितंभाति शुभ्रम् ॥ उ
पासते पुरुषं ये ह्यकामास्ते शुक्रमेतदतिवर्त्तन्ति धीराः ॥ १ ॥ कामान्
यः कामयते मन्यमानः स कामभिर्जायते तत्र तत्र ॥ पर्याप्तकामस्य
कृतात्मनस्तु इहैव सर्वे प्रविलीयन्ति कामाः ॥ २ ॥ नायमात्मा प्रव
चनेन लभ्यो न मेधया न बहुना श्रुतेन ॥ यमेवैष वृणुते तेनलभ्यस्त

स्यैष आत्मा विवृणुते तनुंस्वाम् ॥ ३ ॥नायमात्मा बलहीनेन लभ्यो न च प्रमादात्तपसो वाप्यलिङ्गात् ॥ एतैरुपायैर्यतते यस्तु विद्वांस्तस्यैष आत्मा विशते ब्रह्म धाम ॥ ४ ॥ संप्राप्यैनमृषयो ज्ञानतृप्ताः कृतात्मानो वीतरागाः प्रशान्ताः ॥ ते सर्वगं सर्वतः प्राप्य धीरा युक्तात्मानः सर्वमेवाविशन्ति ॥ ५ ॥ वेदान्तविज्ञानसुनिश्चितार्थाः सन्न्यासयोगाद्यतयः शुद्धसत्त्वाः ॥ ते ब्रह्मलोकेषु परान्तकाले परामृताः परिमुच्यन्ति सर्वे ॥ ६ ॥ गताः कलाः पञ्चदश प्रतिष्ठादेवाश्चसर्वे प्रतिदेव

तासु ॥ कर्माणि विज्ञानमयश्च आत्मा परे ऽव्यये सर्व एकीभवन्ति ॥ ७ ॥ यथा नद्यः स्यन्दमानाः समुद्रेऽस्तं गच्छन्ति नामरूपे विहाय ॥ तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम् ॥ ॥ ८ ॥ स यो ह वै तत्परमं ब्रह्म वेद ब्रह्मैव भवति॥ नास्याब्रह्मवित्कुले भवति ॥ तरति शोकं तरति पाप्मानं गुहाग्रन्थिभ्यो विमुक्तोऽमृतो भवति ॥ ९ ॥ तदेतदृचाऽभ्युक्तं ॥ क्रियावंतः श्रोत्रिया ब्रह्मनिष्ठाः स्वयं जुह्वत एकर्षिं श्रद्धयन्तः ॥ तेषामेवैतां ब्रह्मविद्यां वदेत शिरोव्रतं वि

19

धिवद्यैस्तु चीर्णम् ॥ १० ॥ तदेतत् सत्यमृषिरंगिराः पुरोवाच नै
तदचीर्णव्रतोऽधीते ॥ नमः परमऋषिभ्यो नमः परमऋषिभ्यः॥ ११॥
इति तृतीयमुण्डके द्वितीयः खण्डः ॥ २ ॥ ॥ इति मुण्डकोपनिषत्स
माप्ता ॥ ॐ भद्रं कर्णेभिः शृणुयाम देवाः । भद्रं पश्येमाक्षभिर्यजत्राः॥
स्थिरैरंगैस्तुष्टुवांसस्तनुभिर्व्यशेमदेवहितंयदायुः ॥ स्वस्तिनइंद्रो
वृद्धश्रवाः स्वस्तिनःपूषा विश्ववेदाः ॥स्वस्तिन स्ताक्ष्योंअरिष्टनेमिः
स्वस्तिनोबृहस्पतिर्दधातु ॐ शांतिः शांतिः शांतिः॥ ॐतत्सत् ॥६ ॥

अथाथर्ववेदीयमांडूक्योपनिषदारंभः॥ॐ भद्रंकर्णेभिः शृणुयामदेवाः
। भंद्रपश्येमाक्षभिर्यजत्राः ॥ स्थिरैरंगैस्तुष्टुवाꣳसस्तनूभिर्व्यशेमदेव
हितंयदायुः ॥ स्वस्तिनइंद्रोवृद्धश्रवाः स्वस्तिनः पूषाविश्ववेदाः ॥
स्वस्तिनस्तार्क्ष्योअरिष्टनेमिः स्वस्तिनोबृहस्पतिर्दधातु ॥ ॐ शांतिः
शांतिः शांतिः हरिः ॐ ॥ ॐमित्येतदक्षरमिदꣳसर्वं तस्योपव्याख्या
नं भूतं भवद्भविष्यदिति सर्वमोङ्कार एव ॥ यच्चान्यत्त्रिकालातीतं त
दप्योङ्कार एव॥ १ ॥ सर्वꣳह्येतद्ब्रह्माऽयमात्मा ब्रह्म सोऽयमात्मा चतु

20

ष्पात् ॥ २ ॥ जागरितस्थानोबहिःप्रज्ञः सप्ताङ्ग एकोनविंशतिमुखः स्थूल भुग्वैश्वानरः प्रथमः पादः ॥ ३ ॥ स्वप्नस्थानोऽन्तःप्रज्ञः सप्ताङ्ग एकोनविंशतिमुखः प्रविविक्तभुक् तैजसो द्वितीयः पादः ॥ ४ ॥ यत्र सुप्तो न कञ्चन कामं कामयते न कञ्चन स्वप्नं पश्यति तत्सुषुप्तम् ॥ सुषुप्तस्थान एकीभूतः प्रज्ञानघन एवानन्दमयो ह्यानन्दभुक् चेतोमुखः प्राज्ञस्तृतीयः पादः ॥ ५ ॥ एष सर्वेश्वर एष सर्वज्ञ एषोऽन्तर्याम्येष योनिः सर्वस्य प्रभवाप्ययौ हि भूतानां ॥ ६ ॥ नान्तःप्रज्ञं

न बहिःप्रज्ञं नोभयतःप्रज्ञं न प्रज्ञानघनं न प्रज्ञं नाप्रज्ञम् ॥ अदृष्टम
व्यवहार्यमग्राह्यमलक्षणमचिन्त्यमव्यपदेश्यमेकात्मप्रत्ययसारं प्रप
ञ्चोपशमं शान्तं शिवमद्वैतं चतुर्थं मन्यन्ते स आत्मा स विज्ञेयः॥ ७ ॥
सोऽयमात्माऽध्यक्षरमोङ्कारोऽधिमात्रं पादामात्रा मात्राश्च पादाअका
र उकारो मकार इति ॥ ८ ॥ जागरितस्थानो वैश्वानरोऽकारः प्रथ
मा मात्राप्तेरादिमत्त्वाद्वाप्नोति ह वै सर्व्वान् कामानादिश्च भवतिय ए
वं वेद ॥ ९ ॥ स्वप्नस्थानस्तैजस उकारो द्वितीया मात्रोत्कर्षादुभ

यत्वाद्वोत्कर्षति ह वै ज्ञानसन्ततिं समानश्च भवति नास्याब्रह्मवित्कुले भवति य एवं वेद ॥ १० ॥ सुषुप्तस्थानः प्राज्ञो मकारस्तृतीयामात्रामितेरपीतेर्वा मिनोति ह वा इदꣳ सर्वमपीतिश्च भवति य एवं वेद ॥ ॥ ११ ॥ अमात्रश्चतुर्थोऽव्यवहार्य्यः प्रपञ्चोपशमः शिवोऽद्वैत एवमोङ्कार आत्मैव संविशत्यात्मनाऽऽत्मानं य एवं वेद य एवं वेद ॥ १२॥ इति माण्डूक्योपनिषत्समाप्ता ॥ ॐ भद्रं कर्णेभिः शृणुयामदेवाः। भद्रं पश्येमाक्षभिर्यजत्राः। स्थिरैरंगैस्तुष्टुवाꣳसस्तनूभिः व्यशेम देवहितं

यदायुः ॥ स्वस्ति न इंद्रो वृद्धश्रवाः।स्वस्तिनः पूषाविश्ववेदाः ॥ स्व
स्तिनस्तार्क्ष्योअरिष्टनेमिः । स्वस्तिनो बृहस्पातिर्दधातु ॥ ॐ शांतिः
शांतिः शांतिःॐ तत्सत् हरिः ॐ ॥ ७ ॥

अथ गौडपादाचार्य्यकृततदुपनिषदर्थाविष्करणरूपश्लोकावतारण
म् ॥ अत्रैते श्लोकाः ॥ बहिःप्रज्ञो विभुर्विश्वो ह्यन्तःप्रज्ञस्तु तैज
सः ॥ घनप्रज्ञस्तथा प्राज्ञ एक एव त्रिधा स्मृतः ॥ १ ॥ दक्षिणाक्षिमु
खे विश्वो मनस्यन्तश्च तैजसः ॥ आकाशे च हृदि प्राज्ञस्त्रिधा

देहे व्यवस्थितः ॥ २ ॥ विश्वो हि स्थूलभुङ्नित्यं तैजसः प्रविविक्तभुक् ॥ आनन्दभुक्तथा प्राज्ञस्त्रिधाभोगं निबोधत ॥ ३ ॥ स्थूलं तर्पयते विश्वं प्रविविक्तन्तु तैजसम् ॥ आनन्दश्च तथा प्राज्ञं त्रिधा तृप्तिं निबोधत ॥ ४ ॥ त्रिषु धामसु यद्भोज्यं भोक्ता यश्च प्रकीर्त्तितः ॥ वेदैतदुभयं यस्तु सभुञ्जानो न लिप्यते ॥ ५ ॥ प्रभवः सर्वभावानां सतामिति विनिश्चयः ॥ सर्वं जनयति प्राणश्चेतोंऽशून् पुरुषः पृथक् ॥ ६ ॥ विभूतिं प्रसवन्त्वन्ये मन्यन्ते सृष्टिचिन्तकाः ॥ स्वप्नमाया

स्वरूपेति सृष्टिरन्यैर्विकल्पिता॥७॥इच्छामात्रं प्रभोः सृष्टिरिति सृष्टौ विनिश्चिताः॥ कालात्प्रसूतिं भूतानां मन्यन्ते कालचिन्तकाः॥ ८॥ भोगार्थं सृष्टिरित्यन्ये क्रीडार्थमिति चापरे॥देवस्यैष स्वभावोऽयमाप्त कामस्यकास्पृहा ॥ ९॥ १॥ निवृत्तेः सर्वदुःखानामीशानः प्रभुरव्य यः॥ अद्वैतः सर्वभावानां देवस्तुर्य्यो विभुः स्मृतः॥ १ ॥ कार्य्यका रणबद्धौ ताविष्येते विश्वतैजसौ ॥ प्राज्ञः कारणबद्धस्तु द्वौ तौ तुर्य्ये न सिध्यतः॥ २ ॥ नात्मानं नापरांश्चैव न सत्यं नापि चाऽनृतम्॥ प्रा

ज्ञः किञ्चन संवेत्ति तुर्य्यं तत्सर्वदृक् सदा ॥ ३ ॥ द्वैतस्याग्रहणं तुल्यमु
भयोः प्राज्ञतुर्य्ययोः ॥ बीजनिद्रायुतः प्राज्ञः सा च तुर्य्ये न विद्यते ॥
॥ ४ ॥ स्वप्ननिद्रायुतावाद्यौ प्राज्ञस्त्वस्वप्ननिद्रया ॥ न निद्रां नैव च
स्वप्नं तुर्य्ये पश्यन्ति निश्चिताः ॥ ५ ॥ अन्यथा गृह्णतः स्वप्नो निद्रात
त्त्वमजानतः ॥ विपर्य्यासे तयोः क्षीणे तुरीयं पदमश्नुते ॥ ६ ॥ अना
दिमायया सुप्तो यदा जीवः प्रबुध्यते ॥ अजमनिद्रमस्वप्नमद्वैतं बुध्य
ते तदा ॥ ७ ॥ प्रपञ्चो यदि विद्येत निवर्त्तेत न संशयः ॥ मायामात्रमि

दं द्वैतमद्वैतं परमार्थतः ॥ १८ ॥ विकल्पो विनिवर्त्तेत कल्पितो यदि केनचित् ॥ उपदेशादयं वादो ज्ञाते द्वैतं न विद्यते ॥ १ ॥ १ ॥ विश्वस्यात्वविवक्षायामादिसामान्यमुत्कटम् ॥ मात्रासम्प्रतिपत्तौ स्यादाप्तिसामान्यमेव च ॥ १ ॥ तैजसस्योत्वविज्ञाने उत्कर्षो दृश्यते स्फुटम्॥ मात्रा सम्प्रतिपत्तौ स्यादुभयत्वं तथाविधम् ॥ २ ॥ मकारभावे प्राज्ञस्यमानसामान्यमुत्कटम् ॥मात्रासम्प्रतिपत्तौ तु लयसामान्यमेव च ॥ ३ ॥ त्रिषु धामसु यत्तुल्यं सामान्यं वेत्ति निश्चितः ॥ स पूज्यः सर्व

८४

भूतानां वन्द्यश्चैष महामुनिः ॥ ४ ॥ अकारो नयते विश्वमुकारश्चापि तैजसम् ॥ मकारश्च पुनः प्राज्ञं नामात्रे विद्यते गतिः ॥ ५ ॥ ३ ॥ओङ्कारं पादशो विद्यात् पादा मात्रा नसंशयः ॥ ओङ्कारं पादशोज्ञात्वा न किञ्चिदपि चिन्तयेत् ॥ १ ॥ युञ्जीत प्रणवे चेतः प्रणवो ब्रह्म निर्भयम् ॥ प्रणवे नित्ययुक्तस्य न भयं विद्यते क्वचित् ॥ २ ॥ प्रणवो ह्यपरं ब्रह्म प्रणवश्च परं स्मृतः ॥ अपूर्वोऽनन्तरो बाह्यो न परः प्रणवोऽव्ययः ॥ ३ ॥ सर्वस्य प्रणवो ह्यादिर्मध्यमन्तस्तथैव च ॥ एवं हि प्रणवं ज्ञात्वा

व्यश्नुते तदनन्तरम् ॥ ४ ॥ प्रणवं हीश्वरं विद्यात्सर्वस्य हृदये स्थितम् ॥
सर्वव्यापिनमोङ्कारं मत्वाधीरो न शोचति ॥ ५ ॥ अमात्रोऽनन्तमात्र
श्च द्वैतस्योपशमः शिवः ॥ ओङ्कारो विदितो येन स मुनिर्नेतरो जनः
॥ ६ ॥ इति माण्डूक्योपनिषदर्थाविष्करणपरायांगौडपादीयकारि
कायांप्रथममागमप्रकरणम् ॥ ॐ तत्सत् ॥ ॥ अथ गौडपादीयका
रिकाया वैतथ्याख्यं द्वितीयं प्रकरणम् ॥ हरिः ॐ ॥ वैतथ्यं सर्वभा
वानां स्वप्न आहुर्म्मनीषिणः ॥ अन्तःस्थानात्तु भावानां संवृतत्वेन

हेतुना ॥ १ ॥ अदीर्घत्वाच्च कालस्य गत्वा देशान्न पश्यति ॥ प्रति
बुद्धश्च वै सर्वस्तस्मिन् देशे न विद्यते ॥ २ ॥ अभावश्च रथादीनां श्रूय
ते न्यायपूर्वकम् ॥ वैतथ्यं तेन वै प्राप्तं स्वप्ने आहुः प्रकाशितम् ॥ ३ ॥
अन्तस्थानात्तु भेदानां तथा जागरिते स्मृतम् ॥ यथा तत्र तथा स्वप्ने
संवृतत्वेन भिद्यते ॥ ४ ॥ स्वप्नजागरिते स्थाने ह्येकमाहुर्मनीषिणः॥
भेदानां हि समत्वेन प्रसिद्धेनैव हेतुना ॥ ५ ॥ आदावन्ते च यन्नास्ति
वर्त्तमानेऽपि तत्तथा ॥ वितथैः सदृशाः सन्तोऽवितथा इव लक्षिताः

॥ ६ ॥ सप्रयोजनता तेषां स्वप्ने विप्रतिपद्यते ॥ तस्मादाद्यन्तवत्त्वेन मिथ्यैव खलु ते स्मृताः॥७॥ अपूर्वं स्थानिधर्म्मो हि यथास्वर्गनिवासिनाम् ॥ तानयं प्रेक्षते गत्वा यथैवेह सुशिक्षितः॥ ८ ॥ स्वप्नवृत्तावपि त्वन्तश्चेतसा कल्पितंत्वसत् ॥ बहिश्चेतोगृहीतं सद्दृष्टं वैतथ्यमेतयोः ॥ ९ ॥ जाग्रद्वृत्तावपित्वंतश्चेतसा कल्पितं त्वसत् ॥ बहिश्चेतोगृहीतं सद्युक्तं वैतथ्यमेतयोः ॥ १० ॥ उभयोरपि वैतथ्यं भेदानां स्थानयोर्यदि ॥ क एतान् बुध्यते भेदान् को वै तेषां विकल्पकः ॥ ११ ॥

कल्पयत्यात्मनात्मानमात्मदेवः स्वमायया ॥ स एव बुध्यते भेदानि
ति वेदान्तनिश्चयः ॥ १२॥ विकरोत्यपरान् भावानन्तश्चित्ते व्यवस्थि
तान् ॥ नियतांश्च बहिश्चित्त एवं कल्पयते प्रभुः ॥ १३ ॥ चित्तकाला
हि येऽन्तस्तुद्वयकालाश्च ये बहिः ॥ कल्पिता एव ते सर्वे विशेषो नान्य
हेतुकः ॥ १४ ॥ अव्यक्ता एव येन्तस्तु स्फुटा एव च ये बहिः ॥ कल्पि
ता एव ते सर्वे विशेषस्त्विन्द्रियान्तरे ॥ १५ ॥ जीवं कल्पयते पूर्वं त
तो भावान् पृथग्विधान् ॥ बाह्यानाध्यात्मिकांश्चैव यथाविद्यस्तथा

स्मृतिः ॥ १६ ॥ अनिश्चितायथा रज्जुरन्धकारे विकल्पिता ॥ सर्प
धारादिभिर्भावैस्तद्वदात्मा विकल्पितः॥ १७ ॥ निश्चितायां यथा र
ज्ज्वां विकल्पो विनिवर्त्तते ॥ रज्जु रेवेति चाद्वैतं तद्वदात्मविनिश्चयः॥
॥ १८ ॥ प्राणादिभिरनन्तैस्तु भावैरेतैर्विकल्पितः॥मायैषा तस्य देव
स्य यया ऽयं मोहितःस्वयम् ॥ १९ ॥ प्राण इति प्राणविदो भूतानीति
च तद्विदः ॥गुणा इति गुणविदस्तत्त्वानीति च तद्विदः॥ २० ॥ पादा इ
ति पादविदो विषया इति तद्विदः ॥ लोका इति लोकविदो देवाइतिच

तद्विदः ॥ २१ ॥ वेदाइति वेदविदो यज्ञा इति च तद्विदः ॥ भोक्तेतिच भोक्तृविदो भोज्यमिति च तद्विदः ॥ २२ ॥ सूक्ष्म इति सूक्ष्मविदः स्थूलइति च तद्विदः॥ मूर्त इति मूर्तविदो ऽमूर्त इति च तद्विदः॥ २३॥ काल इति कालविदो दिश इति च तद्विदः॥वादा इति वादविदो भुवनानीति तद्विदः॥ २४ ॥ मन इति मनोविदो बुद्धिरिति च तद्विदः॥ चित्तमिति चित्तविदो धर्म्माधर्म्मौ च तद्विदः ॥ २५॥पञ्चविंशक इत्येके षड्विंश इति चापरे ॥ एकत्रिंशक इत्याहुरनन्त इति चापरे ॥ २६ ॥ लो

काँल्लोकविदः प्राहुराश्रमा इति तद्विदः ॥ स्त्रीपुंनपुंसकं लैङ्गाः परापरम
थापरे ॥ २७ ॥ सृष्टिरिति सृष्टिविदो लय इति च तद्विदः॥स्थितिरिति
स्थितिविदः सर्वे चेह तु सर्वदा ॥ २८ ॥ यं भावं दर्शयेद्यस्य तं भावं
स तु पश्यति ॥ तञ्चावति स भूत्वासौ तद्ग्रहः समुपैति तम् ॥ २९ ॥
एतैरेषोऽपृथग्भावैः पृथगेवेति लक्षितः ॥ एवं यो वेद तत्त्वेन कल्पये
त्सोऽविशङ्कितः ॥ ३० ॥ स्वप्नमाये यथा दृष्टे गन्धर्वनगरं यथा ॥
तथा विश्वमिदं दृष्टं वेदान्तेषु विचक्षणैः ॥ ३१ ॥ न निरोधो नचोत्प

त्तिर्न बद्धो न च साधकः ॥ न मुमुक्षुर्न वै मुक्त इत्येषा परमार्थता॥३२
भावैरसद्भिरेवायमद्वये न च कल्पितः॥ भावा अप्यद्वयेनैव तस्माद
द्वयता शिवा ॥ ३३ ॥ नात्मभावेन नानेदं न स्वेनापि कथञ्चन ॥
न पृथङ्नापृथक्किञ्चिदितितत्त्वविदो विदुः॥ ३४ ॥ वीतरागभयक्रो
धैर्मुनिभिर्वेदपारगैः ॥ निर्विकल्पो ह्ययं दृष्टः प्रपञ्चोपशमोऽद्वयः॥
॥ ३५ ॥ तस्मादेवं विदित्वैनमद्वैते योजयेत् स्मृतिम् ॥ अद्वैतं सम
नुप्राप्य जडवल्लोकमाचरेत् ॥ ३६ ॥ निस्तुतिर्निर्नमस्कारो निःस्व

धाकार एव च ॥ चलाचलनिकेतश्च यतिर्याद्दृच्छिको भवेत्॥ ३७॥ त
त्त्वमाध्यात्मिकं दृष्ट्वा तत्त्वं दृष्ट्वा तु बाह्यतः॥तत्त्वीभूतस्तदारामस्तत्त्वा
दप्रच्युतोभवेत् ॥ ३८ ॥ ॥ इति श्रीगौडपादविरचिते मांडूक्योपनिष
द्वार्तिकेवैतथ्याख्यं द्वितीयं प्रकरणम् ॥ २ ॥ ॥ ॐ ॥ उपासनाश्रि
तोधर्म्मो जाते ब्रह्मणि वर्तते ॥ प्रागुत्पत्तेरजं सर्वं तेनासौ कृपणः स्मृ
तः॥ १ ॥ अतो वक्ष्याम्यकार्पण्यमजातिसमताङ्गतम् ॥ यथा नजा
यते किञ्चिज्जायमानं समं ततः ॥ २ ॥ आत्मा ह्याकाशवज्जीवैर्घटा

काशैरिवोदितः ॥ घटादिवच्च संघातैर्जातावेतन्निदर्शनं ॥ ३ ॥ घटादिषु प्रलीनेषु घटाकाशादयो यथा ॥ आकाशे सम्प्रलीयन्ते तद्वज्जीव इहात्मनि ॥ ४ ॥ यथैकस्मिन् घटाकाशे रजोधूमादिभिर्युते ॥ न सर्वे सम्प्रयुज्यन्ते तद्वज्जीवाः सुखादिभिः ॥ ५ ॥ रूपकार्य्यसमाख्याश्च भिद्यन्ते तत्र तत्र वै ॥ आकाशस्य न भेदोऽस्ति तद्वज्जीवेषु निर्णयः ॥ ६ ॥ नाकाशस्य घटाकाशो विकारावयवौ यथा ॥ नैवात्मनः सदा जीवो विकारावयवौ तथा ॥ ७ ॥ यथा भवति बालानां गगनं

मलिनं मलैः ॥ तथा भवत्यबुद्धानामात्माऽपि मलिनो मलैः ॥ ८ ॥
मरणे सम्भवे चैव गत्यागमनयोरपि ॥ स्थितौ सर्वशरीरेषु आ
काशेनाविलक्षणः ॥ ९ ॥ संघाताः स्वप्नवत्सर्वे आत्ममायावि
वर्जिताः ॥ आधिक्ये सर्वसाम्ये वा नोपपत्तिर्हि विद्यते ॥ १० ॥
रसादयो हि ये कोशा व्याख्यातास्तैत्तिरीयके ॥ तेषामात्मा प
रो जीवः खं यथा संप्रकाशितः ॥ ११ ॥ द्वयोर्द्वयोर्मधुज्ञाने परं
ब्रह्म प्रकाशितम् ॥ पृथिव्यामुदरे चैव यथाकाशः प्रकाशितः ॥ १२ ॥

जीवात्मनोरनन्यत्वमभेदेन प्रशस्यते ॥ नानात्वं निन्द्यते यच्च तदेवं हि
समञ्जसं ॥ १३ ॥ जीवात्मनोः पृथक्त्वं यत्प्रागुत्पत्तेः प्रकीर्त्तितं ॥ भ
विष्यद्वृत्त्या गौणं तन्मुख्यत्वं हि न युज्यते॥ १४॥ मृल्लोहविस्फुलिङ्गाद्यैः
सृष्टिर्या चोदिताऽन्यथा ॥ उपायः सोऽवताराय नास्ति भेदः कथञ्च
न॥ १५॥ आश्रमास्त्रिविधा हीनमध्यमोत्कृष्टदृष्टयः ॥ उपासनोपदि
ष्टेयं तदर्थमनुकम्पया ॥ १६ ॥ स्वसिद्धान्तव्यवस्थासु द्वैतिनो निश्चि
ता दृढम् ॥ परस्परं विरुध्यन्ते तैरयं न विरुध्यते ॥ १७ ॥ अद्वैतं परमा

र्थोऽहि द्वैतं तद्भेद उच्यते॥ तेषामुभयथा द्वैतं तेनायं न विरुध्यते॥ १८॥
मायया भिद्यते ह्येतन्नान्यथाजं कथञ्चन ॥तत्त्वतो भिद्यमाने हि मर्त्य
तामभृतं व्रजेत् ॥ १९ ॥अजातस्यैव भावस्य जातिमिच्छन्ति वादि
नः ॥ अजातो ह्यमृतो भावो मर्त्यतां कथमेष्यति ॥ २० ॥ न भवत्य
मृतं मर्त्यं न मर्त्यममृतं तथा ॥ प्रकृतेरन्यथाभावो न कथञ्चिद्भविष्य
ति ॥ २१ ॥ स्वभावेनामृतो यस्य भावो गच्छति मर्त्यताम् ॥ कृत
केनामृतस्तस्य कथं स्थास्यति निश्चलः ॥ २२ ॥भूततोऽभूततो वा

31

पि सृज्यमाने समाश्रुतिः ॥ निश्चितं युक्तियुक्तञ्च यत्तद्भवति नेतरत्
॥२३॥ नेह नानेति चाम्नायादिन्द्रो मायाभिरित्यपि ॥ अजायमा
नो बहुधा मायया जायते तु सः ॥ २४ ॥ सम्भूतेरपवादाच्च सम्भवः
प्रतिषिध्यते ॥ कोन्वेनं जनयेदिति कारणं प्रतिषिध्यते ॥ २५ ॥ स
एष नेति नेतीति व्याख्यातं निह्नुते यतः ॥ सर्वमग्राह्यभावेन हेतुनाऽ
जं प्रकाशते ॥ २६ ॥ सतो हि मायया जन्म युज्यते नतु तत्त्वतः ॥
तत्त्वतो जायते यस्य जातं तस्य हि जायते ॥ २७ ॥ असतो मायया

जन्म तत्त्वतो नैव युज्यते ॥ वन्ध्यापुत्रो न तत्त्वेन मायया वापि जायते ॥२८॥ यथा स्वप्ने द्वयाभासं स्पन्दते मायया मनः ॥ तथा जाग्रद्द्वयाभासं स्पन्दते मायया मनः ॥२९॥ अद्वयञ्च द्वयाभासं मनःस्वप्ने न संशयः ॥ अद्वयञ्च द्वयाभासं तथा जाग्रन्न संशयः ॥३०॥ मनोदृश्यमिदं द्वैतं यत् किञ्चित् सचराचरम् ॥ मनसो ह्यमनीभावे द्वैतं नैवोपलभ्यते ॥ ३१ ॥ आत्मसत्यानुबोधेन न सङ्कल्पयते यदा ॥ अमनस्तां तदा याति ग्राह्याभावे तदग्रहम् ॥ ३२ ॥ अकल्पकमजं ज्ञानं

32

ज्ञेयाभिन्नं प्रचक्षते ॥ ब्रह्म ज्ञेयमजं नित्यमजेनाजं विबुध्यते॥३३॥
निगृहीतस्य मनसो निर्विकल्पस्य धीमतः॥प्रचारः स तु विज्ञेयः सुषु
प्तेऽन्यो न तत्समः॥३४॥लीयते हि सुषुप्ते तन्निगृहीतं न लीयते॥तदेव
निर्भयं ब्रह्म ज्ञानालोकं समन्ततः॥ ३५॥अजमनिद्रमस्वप्नमनामक
मरूपकम् ॥ सकृद्विभातं सर्वज्ञं नोपचारः कथञ्चन ॥ ३६ ॥ सर्वाभि
लापविगतः सर्वचिन्तासमुत्थितः ॥ सुप्रशान्तः सकृज्ज्योतिः समा
धिरचलोऽभयः ॥ ३७॥ ग्रहो न तत्र नोत्सर्गश्चिन्ता यत्र न विद्यते ॥

आत्मसंस्थं तदा ज्ञानमजाति समतां गतम् ॥ ३८ ॥ अस्पर्शयोगो वै नाम दुर्दशः सर्वयोगिभिः ॥ योगिनो बिभ्यति ह्यस्मादभये भयदर्शिनः ॥ ३९ ॥ मनसो निग्रहायत्तमभयं सर्वयोगिनाम् ॥ दुःखक्षयः प्रबोधश्चाऽप्यक्षया शान्तिरेव च ॥ ४० ॥ उत्सेक उदधेर्यद्वत् कुशाग्रेणैकबिन्दुना ॥ मनसो निग्रहस्तद्वद्भवेदपरिखेदतः ॥ ४१ ॥ उपायेन निगृह्णीयाद्विक्षिप्तं कामभोगयोः ॥ सुप्रसन्नं लये चैव यथाकामो लयस्तथा ॥ ४२ ॥ दुःखं सर्वमनुस्मृत्य कामभोगान्निवर्तयेत् ॥

अजं सर्वमनुस्मृत्य जातं नैव तु पश्यति ॥ ४३ ॥ लये सम्बोधयेच्चि
त्तं विक्षिप्तं शमयेत्पुनः ॥सकषायं विजानीयात् समप्राप्तं न चालयेत्
॥४४॥नास्वादयेत् सुखं तत्र निःसङ्गः प्रज्ञया भवेत्॥ निश्चलं निश्चर
त् चित्तमेकीकुर्यात् प्रयत्नतः ॥ ४५ ॥ यदा न लीयते चित्तं न च वि
क्षिप्यते पुनः ॥ अनिङ्गनमनाभासं निष्पन्नं ब्रह्म तत्तथा ॥ ४६ ॥
स्वस्थं शान्तं सनिर्व्वाणमकथ्यं सुखमुत्तमम् ॥ अजमजेन ज्ञेयेन स
र्वज्ञं परिचक्षते॥४७॥न कश्चिज्जायते जीवः सम्भवोऽस्य न विद्यते॥

एतत्तदुत्तमं सत्यं यत्र किञ्चिन्न जायते ॥ ४८ ॥ इति गौडपादीय
कारिकायामद्वैताख्यं तृतीयं प्रकरणम् ॥ ३ ॥ ॐ तत्सत् ॥ ज्ञाने
नाकाशकल्पेन धर्म्मान् यो गगनोपमान् ॥ ज्ञेयाभिन्नेन सम्बुद्धस्तं
वन्दे द्विपदांवर ॥ १ ॥ अस्पर्शयोगो वै नाम सर्वसत्त्वसुखो हितः ॥
अविवादोऽविरुद्धश्च देशितस्तं नमाम्यहं ॥ २ ॥ भूतस्य जातिमिच्छ
न्ति वादिनः केचिदेव हि ॥ अभूतस्यापरे धीरा विवदन्तः परस्परम् ॥
॥ ३ ॥ भूतं न जायते किञ्चिदभूतं नैव जायते ॥ विवदन्तोऽद्वयात्ह्येव

मजातिं ख्यापयन्ति ते ॥ ४ ॥ ख्याप्यमानामजातिं तैरनुमोदामहे वयम् ॥ विवदामो न तैः सार्द्धमविवादं निबोधत ॥ ५ ॥ अजातस्यैव धर्म्मस्य जातिमिच्छन्ति वादिनः ॥ अजातो ह्यमृतो धर्म्मो मर्त्यतां कथमेष्यति ॥ ६ ॥ न भवत्यऽमृतं मर्त्यं न मर्त्यममृतन्तथा ॥ प्रकृतेर न्यथाभावो न कथञ्चिद्भविष्यति ॥ ७ ॥ स्वभावेनामृतो यस्य ध र्म्मो गच्छति मर्त्यताम् ॥ कृतकेनाऽमृतस्तस्य कथं स्थास्यति निश्च लः ॥ ८ ॥ सांसिद्धिकी स्वाभाविकी सहजा अकृता च या ॥ प्रकृ

तिः सेति विज्ञेया स्वभावं न जहाति या ॥ ९ ॥ जरामरणनिर्मुक्ताः सर्वे धर्म्माः स्वभावतः ॥ जरामरणमिच्छन्तश्च्यवन्ते तन्मनीषया ॥ १० ॥ कारणं यस्य वै कार्य्यं कारणं तस्य जायते ॥ जायमानं कथमजं भिन्नं नित्यं कथञ्च तत् ॥ ११ ॥ कारणाद्यद्यनन्यत्वमतः कार्य्यमजं यदि ॥ जायमानाद्धि वै कार्य्यात् कारणं ते कथं ध्रुवम् ॥ ॥ १२ ॥ अजाद्वै जायते यस्य दृष्टान्तस्तस्य नास्ति वै ॥ जाताच्च जायमानस्य न व्यवस्था प्रसज्यते ॥ १३ ॥ हेतोरादिः फलं येषा

35

मादिर्हेतुः फलस्य च ॥ हेतोः फलस्य चानादिः कथं तैरुपवर्ण्यते ॥ ॥ १४ ॥ हेतोरादिः फलं येषामादिर्हेतुः फलस्य च ॥ तथा जन्म भवेत्तेषां पुत्राज्जन्म पितुर्यथा ॥ १५ ॥ सम्भवे हेतुफलयोरेषितव्यः क्रमस्त्वया ॥ युगपत्सम्भवे यस्मादसम्बन्धो विषाणवत् ॥ १६ ॥ फलादुत्पद्यमानः सन्न ते हेतुः प्रसिद्ध्यति ॥ अप्रसिद्धः कथं हेतुः फलमुत्पादयिष्यति ॥ १७ ॥ यदि हेतोः फलात्सिद्धिः फलसिद्धिश्च हेतुतः ॥ कतरत्पूर्वनिष्पन्नं यस्य सिद्धिरपेक्षया ॥ १८ ॥ अशक्तिरपरिज्ञा

नं क्रमकोपोऽथ वा पुनः ॥ एवं हि सर्व्वथा बुद्धैरजातिः परिदीपिता ॥ १९ ॥ बीजाङ्कुराख्यो दृष्टान्तः सदा साध्यसमो हि सः ॥ नहि साध्यसमो हेतुः सिद्धौ साध्यस्य युज्यते ॥ २० ॥ पूर्व्वापरापरिज्ञान मजातेः परिदीपकम् ॥ जायमानाद्धि वै धर्म्मात्कथं पूर्वं न गृह्यते ॥ ॥ २१ ॥ स्वतो वा परतो वापि न किञ्चिद्वस्तु जायते ॥ सदसत्सद सद्वाऽपि न किञ्चिद्वस्तु जायते ॥ २२ ॥ हेतुर्न जायतेऽनादेः फल श्चापि स्वभावतः ॥ आदिर्न विद्यते यस्य तस्य ह्यादिर्न विद्यते ॥

॥ २३ ॥ प्रज्ञप्तेः सनिमित्तत्वमन्यथा द्वयनाशतः ॥ संक्लेशस्योपल
ब्धेश्च परतन्त्रास्तिता मता ॥ २४ ॥ प्रज्ञप्तेः सनिमित्तत्वमिष्यते
युक्तिदर्शनात् ॥ निमित्तस्यानिमित्तत्वमिष्यते भूतदर्शनात् ॥ २५ ॥
चित्तं न संस्पृशत्यर्थं नार्थाभासं तथैव च ॥ अभूतो हि यतश्चार्थो ना
र्थाभासस्ततः पृथक् ॥ २६ ॥ निमित्तं न सदा चित्तं संस्पृशत्यध्वसु
त्रिषु ॥ अनिमित्तो विपर्यासः कथं तस्य भविष्यति ॥२७॥ तस्मान्न
जायते चित्तं चित्तदृश्यं न जायते ॥ तस्य पश्यन्ति ये जातिं खे वै प

श्यंति ते पदम् ॥ २८ ॥ अजातं जायते यस्मादजातिः प्रकृतिस्ततः ॥
प्रकृतेरन्यथाभावो न कथञ्चिद्भविष्यति ॥२९ ॥ अनादेरन्तवत्त्वञ्च
संसारस्य न सेत्स्यति॥अनन्तता चादिमतो मोक्षस्य न भविष्यति ॥
॥ ३० ॥ आदावन्ते च यन्नास्ति वर्तमानेऽपि तत्तथा ॥ वितथैः सदृ
शाः सन्तोऽवितथाइव लक्षिताः ॥ ३१ ॥ सप्रयोजनता तेषां स्वप्ने वि
प्रतिपद्यते ॥ तस्मादाद्यन्तवत्त्वेन मिथ्यैव खलु ते स्मृताः ॥३२॥ सर्वे
धर्म्मा मृषा स्वप्ने कायस्यान्तर्निदर्शनात् ॥ संवृत्तेऽस्मिन् प्रदेशे वै

३

भूतानां दर्शनं कुतः ॥ ३३ ॥ न युक्तं दर्शनं गत्वा कालस्यानियमा द्गतौ ॥ प्रतिबुद्धश्च वै सर्वस्तास्मिन् देशे न विद्यते ॥ ३४ ॥ मित्रा द्यैः सह सम्मन्त्र्य सबुद्धो न प्रपद्यते ॥ गृहीतश्चापियत्किञ्चित् प्रति बुद्धो न पश्यति ॥३५॥ स्वप्ने चावस्तुकः कायः पृथगन्यस्य दर्शनात् ॥ यथा कायस्तथा सर्वं चित्तदृश्यमवस्तुकम् ॥ ३६ ॥ ग्रहणाज्जागरि तवत्तद्धेतुः स्वप्न इष्यते ॥ तद्धेतुत्वात्तु तस्यैव सज्जागरितमिष्यते ॥ ३७॥ उत्पादस्याप्रसिद्धत्वादजं सर्वमुदाहृतम् ॥ न च भूतादभू

तस्य सम्भवोऽस्ति कथञ्चन ॥ ३८ ॥ असज्जागरिते दृष्ट्वा स्वप्ने पश्य
ति तन्मयः ॥ असत्स्वप्नेऽपि दृष्ट्वा च प्रतिबुद्धो न पश्यति ॥ ३९ ॥
नास्त्यसद्धेतुकमसत् सदसद्धेतुकन्तथा ॥ सच्च सद्धेतुकं नास्ति सद्धे
तुकमसत्कुतः ॥ ४० ॥विपर्य्यासाद्यथाजाग्रदचिन्त्यान् भूतवत् स्पृशे
त् ॥ तथा स्वप्ने विपर्य्यासाद्धर्मांस्तत्रैव पश्यति ॥ ४१ ॥ उपलम्भा
त् समाचारादस्ति वस्तुत्ववादिनाम् ॥ जातिस्तु देशिता बुद्धैरजातेस्त्र
सतांसदा ॥ ४२॥ अजातेस्त्रसतान्तेषामुपलम्भाद्वियन्ति ये ॥ जाति

दोषा न सेत्स्यन्ति दोषो ऽप्यल्पो भविष्यति ॥ ४३ ॥ उपलम्भात् स
माचारान्मायाहस्ती यथोच्यते॥उपलम्भात् समाचारादस्ति वस्तुत
थोच्यते॥४४॥ जात्याभासं चलाभासं वस्त्वाभासं तथैवच॥अजा
चलमवस्तुत्वं विज्ञानं शान्तमद्वयम्॥४५॥एवं न जायते चित्तमेवंध
र्म्मा अजाः स्मृताः॥एवमेव विजानन्तो न पतन्ति विपर्य्यये॥४६॥
ऋजुवक्रादिकाभासमलातस्पन्दितं यथा ॥ ग्रहणग्राहकाभासं विज्ञा
नस्पन्दितन्तथा ॥४७॥ अस्पन्दमानमलातमनाभासमजं यथा ॥अ

स्पन्दमानं विज्ञानमनाभासमजं तथा॥४८॥अलाते स्पन्दमाने वैना
भासा अन्यतो भुवः॥नततोऽन्यत्र निष्पन्दान्नालातम्प्रविशन्ति ते ॥
॥४९॥ननिर्गता अलातात्ते द्रव्यत्वाभावयोगतः ॥ विज्ञानेऽपि तथैव
स्युराभासस्याविशेषतः॥ ५० ॥ विज्ञाने स्पन्दमाने वै नाभासा अ
न्यतो भुवः ॥ न ततोऽन्यत्र निष्पन्दान्न विज्ञानं विशन्ति ते ॥ ५१॥ न
निर्गतास्ते विज्ञानाद् द्रव्यत्वाभावयोगतः ॥ कार्य्यकारणताभावाद्य
तोऽचिन्त्याः सदैव ते ॥ ५२ ॥ द्रव्यं द्रव्यस्य हेतुः स्यादन्यदन्यस्य चै

३०

वहि ॥द्रव्यत्वमन्यभावो वा धर्म्माणां नोपपद्यते॥ ५३ ॥ एवं न चि
त्तजा धर्म्माश्चित्तं वापि न धर्म्मजम् ॥ एवं हेतुफला जातिं प्रविश
न्ति मनीषिणः॥ ५४॥ यावद्धेतुफलावेशस्तावद्धेतुफलोद्भवः॥ क्षी
णेहेतुफलावेशेनास्ति हेतुफलोद्भवः॥ ५५॥ यावद्धेतुफलावेशः सं
सारस्तावदायतः॥ क्षीणे हेतुफलावेशे संसारं न प्रपद्यते॥ ५६ ॥ संवृ
त्या जायते सर्वं शाश्वतं नास्ति तेन वै॥ सद्भावेन ह्यजं सर्व्वमुच्छेद
स्तेन नास्ति वै॥ ५७॥ धर्म्माय इति जायन्ते जायन्ते ते न तत्त्वतः॥

जन्ममायोपमन्तेषां सा च माया न विद्यते ॥ ५८ ॥ यथा मायामया
द्बीजाज्जायते तन्मयोऽङ्कुरः ॥ नाऽसौ नित्यो न चोच्छेदी तद्वद्धर्म्मे
षु योजना ॥ ५९ ॥ नाजेषु सर्व्वधर्म्मेषु शाश्वताशाश्वताभिधा ॥
यत्र वर्णा न वर्त्तन्ते विवेकस्तत्र नोच्यते ॥ ६० ॥ यथा स्वप्ने द्वयाभा
सं चित्तं चलति मायया ॥ तथा जाग्रद्द्वयाभासं चित्तं चलति माय
या ॥ ६१ ॥ अद्वयञ्च द्वयाभासं चित्तं स्वप्ने न संशयः ॥ अद्वयञ्च द्व
याभासं तथा जाग्रन्न संशयः ॥ ६२ ॥ स्वप्नदृक् प्रचरन् स्वप्ने दिक्षु वै

40

दशसु स्थितान् ॥ अण्डजान् स्वेदजान् वापि जीवान् पश्यति यान् स
दा ॥ ६३ ॥ स्वप्नदृक् चित्तदृश्यास्ते न विद्यन्ते ततः पृथक् ॥ तथा त
दृश्यमेवेदं स्वप्नदृक् चित्तमिष्यते ॥ ६४ ॥ चरन् जागरिते जाग्रद्दिक्षु
वै दशसु स्थितान् ॥ अण्डजान् स्वेदजान् वापि जीवान् पश्यति यान्
सदा ॥ ६५ ॥ जाग्रच्चित्तेक्षणीयास्ते न विद्यन्ते ततः पृथक् ॥ तथा
तद्दृश्यमेवेदं जाग्रतश्चित्तमिष्यते ॥ ६६ ॥ उभे ह्यन्योन्यदृश्ये ते किं
न्तदस्तीति चोच्यते ॥ लक्षणाशून्यमुभयं तन्मते नैव गृह्यते॥ ६७ ॥

यथा स्वप्नमयो जीवो जायते म्रियतेऽपि च ॥ तथा जीवा अमी सर्वे भवन्ति न भवन्ति च ॥ ६८ ॥ यथा मायामयो जीवो जायते म्रियतेऽपि च ॥ तथा जीवा अमी सर्वे भवन्ति न भवन्ति च ॥ ६९ ॥ यथा निर्म्मितको जीवो जायते म्रियतेऽपिच ॥ तथा जीवा अमी सर्वे भवन्ति न भवन्ति च ॥ ७० ॥ न कश्चिज्जायते जीवः सम्भवोऽस्य न विद्यते ॥ एतत्तदुत्तमं सत्यं यत्र किञ्चिन्न जायते ॥ ॥ ७१ ॥ चित्तस्पन्दितमेवेदं ग्राह्यग्राहकवद्द्वयम् ॥ चित्तं निर्विषयं नि

41

त्यमसङ्गं तेन कीर्तितम् ॥ ७२ ॥ योऽस्ति कल्पितसंवृत्या परमार्थेन नास्त्यसौ ॥ परतन्त्राभिसंवृत्या स्यान्नास्ति परमार्थतः ॥ ७३ ॥॥ अजः कल्पितसंवृत्या परमार्थेन नाप्यजः ॥ परतन्त्रोऽभिनिष्पत्त्या संवृत्याजायते तु सः ॥ ७४ ॥ अभूताभिनिवेशोऽस्ति द्वयं तत्र नविद्यते ॥ द्वयाभावं स बुद्ध्वैव निर्निमित्तो न जायते ॥ ७५ ॥ यदान लभते हेतूनुत्तमाधममध्यमान् ॥ तदा न जायते चित्तं हेत्वभावे फलं कुतः ॥ ७६ ॥ अनिमित्तस्य चित्तस्य यानुत्पत्तिः समाऽद्वया ॥ अ

जातस्यैव सर्वस्य चित्तदृश्यं हि तद्यतः ॥ ७७॥ बुद्ध्वा निमित्ततां स
त्यां हेतुं पृथगनाप्नुवन् ॥ वीतशोकं तथाकाममभयं पदमश्नुते॥७८॥
अभूताभिनिवेशाद्धि सदृशे तत्प्रवर्त्तते ॥ वस्त्वभावं स बुद्ध्वैव निःस
ङ्गं विनिवर्त्तते ॥ ७९ ॥ निवृत्तस्याप्रवृत्तस्य निश्चला हि तदा स्थि
तिः ॥ विषयः स हि बुद्धानां तत्साम्यमजमद्वयम् ॥ ८० ॥ अजम
निद्रमस्वप्नं प्रभातम्भवतिस्वयम् ॥ सकृद्विभातो ह्येवैष धर्मो धातुः
स्वभावतः॥ ८१ ॥ सुखमाव्रियते नित्यं दुःखं विव्रियते सदा ॥ य

स्य कस्य च धर्मस्य ग्रहेण भगवानसौ ॥ ८२ ॥ अस्तिनास्त्यस्ति
नास्तीति नास्तिनास्तीति वा पुनः ॥ चलस्थिरोभयाभावैरावृणोत्ये
व बालिशः ॥ ८३ ॥ कोटयश्चतस्र एतास्तु ग्रहैर्यासां सदावृतः ॥
भगवानाभिरस्पृष्टो येन दृष्टः ससर्वदृक् ॥ ८४ ॥ प्राप्य सर्वज्ञतां कृ
त्स्नां ब्राह्मण्यं पदमद्वयं ॥ अनापन्नादिमध्यान्तं किमतःपरमीहते ॥
॥ ८५ ॥ विप्राणां विनयो ह्येष शमः प्राकृत उच्यते ॥ दमः प्रकृति
दान्तत्वादेवं विद्वाञ्छमं व्रजेत् ॥ ८६ ॥ सवस्तु सोपलम्भञ्च द्वयं

लौकिकमिष्यते ॥ अवस्तु सोपलम्भञ्च शुद्धं लौकिकमिष्यते ॥
॥ ८७ ॥ अवस्त्वनुपलम्भञ्च लोकोत्तरमिति स्मृतम् ॥ ज्ञानं ज्ञेयञ्च
विज्ञेयं सदा बुद्धैः प्रकीर्त्तितम् ॥ ८८ ॥ ज्ञाने च त्रिविधे ज्ञेये क्रमेण
विदिते स्वयम् ॥ सर्वज्ञता हि सर्वत्र भवतीह महाधियः ॥ ८९ ॥ हे
यज्ञेयाप्यपाक्यानि विज्ञेयान्यग्रयाणतः ॥ तेषामन्यत्र विज्ञेयादुप
लम्भास्त्रिषु स्मृतः ॥ ९० ॥ प्रकृत्याकाशवज्ज्ञेयाः सर्वे धर्म्मा अ
नादयः ॥ विद्यते नहि नानात्वं तेषां क्वच न किञ्चन ॥ ९१ ॥ आ

दिबुद्धाः प्रकृत्यैव सर्वे धर्म्माः सुनिश्चिताः ॥ यस्यैवम्भवति क्षान्तिः सोऽमृतत्वाय कल्पते ॥ १२ ॥ आदि शान्ता ह्यनुत्पन्नाः प्रकृत्यैव सुनिर्वृताः ॥ सर्वे धर्म्माः समाभिन्ना अजं साम्यं विशारदम् ॥ १३ ॥ वैशारद्यन्तु वै नास्ति भेदे विचरतां सदा ॥ भेदनिम्नाः पृथग्वादास्तस्मात्ते कृपणाः स्मृताः ॥ १४ ॥ अजे साम्ये तु ये केचिद्भविष्यन्ति सुनिश्चिताः ॥ ते हि लोके महाज्ञानास्तच्च लोको न गाहते ॥ १५ ॥ अजेष्वजमसंक्रान्तं धर्म्मेषु ज्ञानमिष्यते ॥ यतो न क्रमते ज्ञानमसङ्गं

तेन कीर्तितम् ॥ ९६ ॥ अणुमात्रेऽपि वैधर्म्ये जायमानेऽविपश्चितः ॥ असङ्गता सदा नास्ति किमुतावरणच्युतिः ॥ ९७ ॥ अलब्धावरणाः सर्व्वे धर्म्माः प्रकृतिनिर्म्मलाः ॥ आदौ बुद्धास्तथा मुक्ता बुद्ध्यन्त इति नायकाः ॥ ९८ ॥ क्रमते न हि बुद्धस्य ज्ञानं धर्म्मेषु तापिनः ॥ सर्व्वे धर्म्मास्तथा ज्ञानं नैतद्बुद्धेन भाषितम् ॥ ९९ ॥ दुर्द्दर्शमतिगंभीरमजं साम्यं विशारदम् ॥ बुद्ध्वा पदमनानात्वं नमस्कुर्म्मो यथा बलम् ॥ १०० ॥ इति गौडपादाचार्य्यकृतामाण्डूक्योपनिषत्कारिकाः सम्पूर्णाः ॥ ॐ

